आलुच् प्रत्ययः

१५८. स्पृहि-गृहि-पति-दयि-निद्रा-तन्द्रा-श्रद्धाभ्य आलुच् ३१३८।

रु प्रत्ययः

१५९. दा-धेट्-सि-शद-सदो रुः ३१३९।

क्मरच् प्रत्ययः

१६०. सृ-घस्यदः क्मरच् ३१४०।

घुरच् प्रत्ययः

१६१. भञ्ज-भास-मिदो घुरच् ३१४१।

कुरच् प्रत्ययः

१६२. विदि-भिदिच्छिदेः कुरच् ३१४२।

क्वरप् प्रत्ययः

१६३. इण्-नश्जि-सर्तिभ्यः - क्वरप् ३१४३।

१६४. गत्वरश्च ३१४४।

ऊक-प्रत्ययः

१६५. जागरूकः ३१४५।

१६६. यजजपदशां यङः ३१४६।

र-प्रत्ययः

१६७. नमि-कम्पि-स्म्यजस-कम-हिंस - दीपो रः ३१४७।

उ-प्रत्ययः

१६८. सनाशंसभिक्ष उः ३१४८।

१६९. विन्दुरिच्छुः ३१४९।

१७०. क्याच्छन्दसि ३१५०।

कि-किन्-प्रत्ययौ

१७१. आदृ-गम-हन-जनः किकिनौ - लिट् च ३१५१।

नजिङ् प्रत्ययः

१७२. स्वपितृषोर्नजिङ् ३१५२।

आरु-प्रत्ययः

१७३. शॄवन्द्योरारुः ३१५३।

क्रुक्-लुकन्-प्रत्ययौ

१७४. भियः क्रुक्लुकनौ ३१५४।

वरच् प्रत्ययः

१७५. स्थेश-भास-पिस-कसो वरच् ३१५५।

१७६. यश्च यङः ३१५६।

क्विप् प्रत्ययः

१७७. भ्राज-भास-धुर्वि-द्युतोर्जि-पॄ-जु- ग्रावस्तुवः क्विप् ३१५७।

१७८. अन्येभ्योऽपि दृश्यते ३१५८।

आ क्वेस्तच्छील-तद्धर्म-तत्साधुकारिषु इत्यधिकार इतो निवृत्तः।

१७९. भुवः संज्ञान्तरयोः ३१५९।

डु-प्रत्ययः

१८०. विप्रसंभ्यो ड्वसंज्ञायाम् ३१६०।

ष्ट्रन् प्रत्ययः

१८१. धः कर्मणि ष्ट्रन् ३१६१।

१८२. दाम्नीशस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे ३१६२।

१८३. हल-सूकरयोः पुवः ३१६४।

इत्र-प्रत्ययः

१८४. अर्ति-लू-धू-सू-खन-सह-चर इत्रः ३१६५।

१८५. पुवः संज्ञायाम् ३१६६।

१८६. कर्तरि चर्षि-देवतयोः ३१६७।

क्त-प्रत्ययः

१८७. **जीतः क्तः ३०८८।**

१८८. **मतिबुद्धि-पूजार्थेभ्यश्च ३०८९।**

## तृतीयाध्याये तृतीयः पादः

उणादि-प्रत्ययाः

उणादयः प्रत्ययाः वर्तमानेऽर्थे संज्ञायां विषये बहुलं भवन्ति। इमे प्रत्यया यतो विहितास्ततोऽन्यत्रापि भवन्तीति वेदितव्यम्। केचिदविहिता अपि प्रयोगत उन्नीयन्ते। 'वर्तमाने लट् ३.२.१२३' इत्यतः प्रवर्तमानो वर्तमानाधिकार इतो निवृत्तः।

१. **उणादयो बहुलम् ३१६९।**

२. **भूतेऽपि दृश्यन्ते ३१७०।**

भविष्यदधिकारः

३. **भविष्यति गम्यादयः ३१७१।**

'भविष्यति' इत्यधिक्रियते। इत आरभ्य 'अनद्यतने लुट् ३.३.१५' इत्यतः प्राक् भविष्यदर्थे प्रत्ययाः विहिताः।

लट् प्रत्ययः (लकारप्रत्ययः)

४. **यावत्पुरानिपातयोर्लट् २७८३।**

५. **विभाषा कदा-कर्ह्योः २७८४।**

६. **किं वृत्ते लिप्सायाम् २७८५।**

७. **लिप्स्यमानसिद्धौ च २७८६।**

८. **लोडर्थलक्षणे च २७८७।**

लिङ् प्रत्ययः (लकारप्रत्ययः)

९. **लिङ् चोर्ध्व-मौहूर्तिके २७८८।**

तुमुन्ण्वुल्प्रत्ययौ

१०. **तुमुन्ण्वुलौ क्रियायां - क्रियार्थायाम् ३१७५।**

इतः क्रियायां क्रियार्थायाम् इति अनुवर्तते ३.३.१२ इति यावत्।

११. **भाववचनाश्च ३१८०।**

१२. **अण्कर्मणि च ३१८१।**

लृट् प्रत्ययः (लकारप्रत्ययः)

१३. **लृट् शेषे च २१९३।**

लृटः स्थाने शतृशानचौ

१४. **लृटः सद्वा ३१०७।**

लुट् प्रत्ययः (लकारप्रत्ययः)

१५. **अनद्यतने लुट् २१८५।**

'भविष्यति' इति निवृत्तम्। इत उत्तरं त्रिषु कालेषु प्रत्ययाः।

घञ् प्रत्ययः ३.३.५५ इति यावत्

१६. **पद-रुज-विश-स्पृशो घञ् ३१८२।**

१७. **सृ स्थिरे ३१८४।**

भावाधिकारः

१८. **भावे ३१८४।**

'आक्रोशे नञ्यनिः ३.३.११२' इति यावदधिकारोऽयम्। इत उत्तरं भावे वाच्ये धातोः प्रत्ययाः भवन्तीति वेदितव्यम्।

'अकर्तरि च कारके संज्ञायाम्' इत्यधिकारः

१९. **अकर्तरि च कारके संज्ञायाम् ३१८६।**

अधिकारोऽयम् 'आक्रोशे नञ्यनिः ३.३.११२' इति यावत्। इत उत्तरं कर्तृवर्जिते कारके संज्ञायां विषये धातोः प्रत्ययाः भवन्ति।

२०. **परिमाणाख्यायाम् सर्वेभ्यः।**(घञ्) **३१९०।**

२१. इङश्च। (अचोऽपवादो घञ्) ३१९१।
२२. उपसर्गे रुवः। (अपोऽपवादो घञ्) ३१९२।
२३. समि युद्रुदुवः। (अपोऽपवादो घञ्) ३१९४।
२४. श्रिणीभुवोऽनुपसर्गे ३१९५। (अजपोरपवादो घञ्)
२५. वौ क्षुश्रुवः। (अपोऽपवादो घञ्) ३१९६।
२६. अवोदोर्नियः। (अचोऽपवादो घञ्) ३१९७।

इतः अपोऽपवादो घञ् प्रत्ययः

२७. प्रे द्रुस्तुस्रुवः. ३१९८।
२८. निरभ्योः पूल्वोः ३१९९।
२९. उन्न्योर्ग्रः ३२००।
३०. कॄ धान्ये ३२०१।
३१. यज्ञे समि स्तुवः ३२०२।
३२. प्रे स्त्रोऽयज्ञे ३२०३।
३३. प्रथने वावशब्दे ३२०४।
३४. छन्दोनाम्नि च ३२०५।
३५. उदि ग्रहः ३२०७।
३६. समि मुष्टौ ३२०८।

अचोऽपवादो घञ् प्रत्ययः

३७. परिन्योर्नीणोर्द्यूताभ्रेषयोः ३२०९।
३८. परा-वनुपात्यय इणः३२१०।
३९. व्युपयोः शेतेः पर्याये ३२११।
४०. हस्तादाने चेरस्तेये ३२१२।
४१. निवास-चिति-शरीरोपसमा-धानेष्वादेश्च कः ३२१३।
४२. संघे चानौत्तराधर्ये ३२१४।

णच् प्रत्ययः

४३. कर्मव्यतिहारे णच् -स्त्रियाम् ३२१५।

इनुण् प्रत्ययः

४४. अभिविधौ भाव इनुण् ३२१८।

घञ् प्रत्ययः

४५. आक्रोशेऽवन्योर्ग्रहः ३२२०।
४६. प्रे लिप्सायाम् ३२२१।
४७. परौ यज्ञे ३२२२।
४८. नौ वृ धान्ये ३२२३।
४९. उदि श्रयति-यौति-पू-द्रुवः ३२२४। (अजपोरपवादः)
५०. विभाषाऽऽङि रुप्लुवोः ३२२५। (अपोऽपवादः)
५१. अवे ग्रहो वर्षप्रतिबन्धे ३२२६।
५२. प्रे वणिजाम् ३२२७।
५३. रश्मौ च ३२२८।
५४. वृणोते-राच्छादने ३२२९।
५५. परौ भुवोऽवज्ञाने ३२३०।

अच् प्रत्ययः

५६. एरच् ३२३१।

अप् प्रत्ययः ३.३.८७ इति यावत्

५७. ॠदोरप् ३२३२।

घञोऽपवादोऽप् प्रत्ययः

५८. ग्रह-वृ-दृ-निश्चि-गमश्च ३२३४।
५९. उपसर्गेऽदः३२३५।
६०. नौ ण च ३२३७।
६१. व्यध-जपो-रनुपसर्गे ३२३८।

६२. स्वन-हसोर्वा ३२३९।
६३. यमः समुप-निविषु च ३२४०।
६४. नौ गद-नद-पठ-स्वनः ३२४१।
६५. क्वणो वीणायां च ३२४२।
६६. नित्यं पणः परिमाणे ३२४३।
६७. मदोऽनुपसर्गे ३२४४।
६८. प्रमद-संमदौ हर्षे ३२४५।
६९. समुदोरजः पशुषु ३२४६।
७०. अक्षेषु ग्लहः ३२४७।
७१. प्रजने सर्तेः ३२४८।
७२. ह्वः सम्प्रसारणं च –
न्यभ्युपविषु ३२४९।
७३. आङि युद्धे ३२५०।
७४. निपानमाहावः ३२५१।
७५. भावेऽनुपसर्गस्य ३२५२।
७६. हनश्च वधः ३२५३।
७७. मूर्तौ घनः ३२५४।
७८. अन्तर्घनो देशे ३२५५।
७९. अगारैकदेशे प्रघणः –
प्रघाणश्च ३२५६।
८०. उद्घनोऽत्याधानम् ३२५७।
८१. अपघनोऽङ्गम् ३२५८।
८२. करणेऽयोविद्रुषु ३२५९।
८३. स्तम्बे क च ३२६०।
८४. परौ घः ३२६१।
८५. उपघ्न आश्रये ३२६३।
८६. संघोद्घौ गणप्रशंसयोः ३२६४।
८७. निघो निमित्तम् ३२६५।

क्त्रि-प्रत्ययः

८८. ड्वितः क्त्रिः ३२६६।

अथुच् प्रत्ययः

८९. ट्वितोऽथुच् ३२६७।

नङ् प्रत्ययः

९०. यज-याच-यत-विच्छ-प्रच्छ-
रक्षो नङ् ३२६८।

नन् प्रत्ययः

९१. स्वपो नन् ३२६९।

कि प्रत्ययः

९२. उपसर्गे घोः किः ३२७०।
९३. कर्मण्यधिकरणे च ३२७१।

स्त्र्यधिकारः

क्तिन् प्रत्ययः

९४. स्त्रियां क्तिन् ३२७२।

अधिकारोऽयम् ३.३.११२ इति यावत्। अकर्तरि च कारके, भावे, स्त्रीलिङ्गे धातोः क्तिन् प्रत्ययो भवति घञजपामपवादः। अस्त्रियामिति पर्युदासाद् वाऽसरूपविधिर्नात्र प्रवर्तते। अतोऽस्मिन्नसरूपोऽपवादप्रत्यय उत्सर्गप्रत्ययं नित्यं बाधते।

९५. स्था-गा-पा-पचो भावे ३२७३।
९६. मन्त्रे वृषेष-पच-मन-विद-भू-
वी-रा उदात्तः ३४२०।
९७. ऊति-यूति-जूति-साति-हेति-
कीर्तयश्च ३२७४।

क्यप् प्रत्ययः

९८. व्रज-यजोर्भावे क्यप् ३२७५।
९९. संज्ञायां समज-निषद-निपत-मन-
विद-षुञ्शीङ्-भृञिणः ३२७६।

श प्रत्ययः

१००. कृञः श च ३२७७।
१०१. इच्छा ३२७८।

अ प्रत्ययः

१०२. अ प्रत्ययात् ३२७९।

१०३. गुरोश्च हलः ३२८०।

अङ् प्रत्ययः

१०४. षिद्भिदादिभ्योऽङ् ३२८१।

१०५. चिन्ति-पूजि-कथि-कुम्बि-चर्चश्च ३२८२।

१०६. आतश्चोपसर्गे ३२८३।

युच् प्रत्ययः

१०७. ण्यासश्रन्थो युच् ३२८४।

ण्वुल् प्रत्ययः

१०८. रोगाख्यायां ण्वुल्बहुलम् ३२८५।

१०९. संज्ञायाम् ३२८६।

इञ् प्रत्ययः

११०. विभाषाख्यान-परिप्रश्नयोरिञ्च ३२८७।

ण्वुच् प्रत्ययः

१११. पर्यायार्हर्णोत्पत्तिषु ण्वुच् ३२८८।

अनि-प्रत्ययः

११२. आक्रोशे नञ्यनिः ३२८९।

इतः स्त्र्यधिकारो निवृत्तः।

भावधिकारश्च।

कृत्यल्युट्प्रत्ययानामर्थनिर्देशः।

११३. कृत्यल्युटो बहुलम् २८४१।

क्त-प्रत्ययः

११४. नपुंसके भावे क्तः ३०९०।

ल्युट् प्रत्ययः

११५. ल्युट् च ३२९०।

११६. कर्मणि च येन संस्पर्शात् कर्तुः - शरीरसुखम् ३२९१।

करणाधिकरणयोः प्रत्ययाः

११७. करणाधिकरणयोश्च ३२९३।

अधिकारोऽयम् ३.३.१२५ इति यावत्। अधिकारेऽस्मिन् करणाधिकरणयोरर्थयोर्धातोः प्रत्यया विहिताः।

घ-प्रत्ययः

११८. पुंसि संज्ञायां घः प्रायेण ३२९६।

११९. गोचर-संचर-वह-व्रज-व्यजापण-निगमाश्च ३२९८।

घञ् प्रत्ययः

१२०. अवे तॄस्त्रोर्घञ् ३२९९।

१२१. हलश्च ३३००।

१२२. अध्यायन्यायोद्या-वसंहाराश्च ३३०१।

१२३. उदङ्कोऽनुदके ३३०२।

१२४. जालमानायः ३३०३।

१२५. खनो घ च ३३०४।

कृच्छ्राकृच्छ्रार्थेषु प्रत्ययाः

खल् प्रत्ययः

१२६ ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु - खल् ३३०५।

१२७. कर्तृकर्मणोश्च भूकृञोः ३३०८।

युच् प्रत्ययः

१२८. आतो युच् ३३०९।

१२९. छन्दसि गत्यर्थेभ्यः ३४२१।

१३०. अन्येभ्योऽपि दृश्यते ३४२२।

वर्तमानवत्प्रत्ययाः

१३१. वर्तमानसामीप्ये वर्तमानवद्वा २७८९।

भूतवत्प्रत्ययाः

१३२. आशंसायाम् भूतवच्च २७९०।

इतो लकारप्रत्ययाः

लृट् प्रत्ययः

१३३. क्षिप्रवचने लृट् २७९१।

लिङ् प्रत्ययः

१३४. आशंसावचने लिङ् २७९२।

१३५. नानद्यतनवत्क्रिया-प्रबन्ध - सामीप्ययोः २७९३।

१३६. भविष्यति - मर्यादावचनेऽवरस्मिन् २७९४।

१३७. कालविभागे - चानहोरात्राणाम् २७९५।

१३८. परस्मिन्विभाषा २७९६।

लृङ् प्रत्ययः

१३९. लिङ्निमित्ते लृङ् - क्रियातिपत्तौ २२२९।

१४०. भूते च २७९७।

१४१. वोताप्योः २७९८।

लट् प्रत्ययः

१४२. गर्हायां लडपिजात्वोः २७९९।

लिङ् प्रत्ययः

१४३. विभाषा कथमि लिङ् च २८००।

लिङ्लृटौ प्रत्ययौ

१४४. किंवृत्ते लिङ्लृटौ २८०१।

१४५. अनवक्लृप्त्यमर्षयो- -रकिंवृत्तेऽपि २८०२।

१४६. किंकिलास्त्यर्थेषु लृट् २८०३।

१४७. जातुयदोर्लिङ् २८०४।

१४८. यच्च-यत्रयोः २८०५।

१४९. गर्हायाञ्च २८०६।

१५०. चित्रीकरणे च २८०७।

१५१. शेषे लृडयदौ २८०८।

लिङ् प्रत्ययः

१५२. उताप्योः समर्थयोर्लिङ् २८०९।

१५३. कामप्रवेदनेऽकच्चिति २८१०।

१५४. सम्भावनेऽलमिति चेत् - सिद्धाप्रयोगे २८११।

१५५. विभाषा धातौ सम्भावन - वचनेऽयदि २८१२।

१५६. हेतुहेतुमतोर्लिङ् २८१३।

लिङ्लोटौ प्रत्ययौ

१५७. इच्छार्थेषु लिङ्लोटौ २८१४।

तुमुन् प्रत्ययः (अयं कृत्प्रत्ययः)

१५८. समानकर्तृकेषु तुमुन् ३१७६।

लिङ्प्रत्ययः

१५९. लिङ् च २८१५।

१६०. इच्छार्थेभ्यो विभाषा - वर्तमाने २८१६।

१६१. विधि-निमन्त्रणा-मन्त्रणा-धीष्ट- सम्प्रश्न-प्रार्थनेषु लिङ् २२०८।

लोट्प्रत्ययः

१६२. लोट् च २१९४।

१६३. प्रैषातिसर्ग-प्राप्तकालेषु - कृत्याश्च २८१७।

१६४. लिङ् चोर्ध्वमौहूर्त्तिके २८१८।

१६५. स्मे लोट् २८१९।

१६६. अधीष्टे च २८२०।

तुमुन् प्रत्ययः (अयं कृत् प्रत्ययः)

१६७. कालसमयवेलासु तुमुन् ३१७९।

लिङ्प्रत्ययः

१६८. लिङ् यदि २८२१।

कृत्य-तृच्-णिनि-लिङ्-लोट्-
प्रत्ययानामर्थाः

१६९. अर्हे कृत्यतृचश्च २८२२।
१७०. आवश्यकाध-
मर्ण्ययोर्णिनिः ३३११।
१७१. कृत्याश्च ३३१२।
१७२. शकि लिङ् च २८२३।
१७३. आशिषि लिङ्लोटौ २१९५।

क्तिच्-क्त-प्रत्ययौ (इमौ कृत्प्रत्ययौ)

१७४. क्तिच्क्तौ च संज्ञायाम् ३३१३।

लुङ्-लङ्-प्रत्ययौ

१७५. माङि लुङ् २२१९।
१७६. स्मोत्तरे लङ् च २२२०।

## तृतीयाध्याये चतुर्थः पादः

प्रत्ययार्थाः

१. धातुसंबन्धे प्रत्ययाः २८२४।
२. क्रियासमभिहारे लोट् लोटो -
हिस्वौ वा च तध्वमोः २८२५।
३. समुच्चयेऽन्यतरस्याम् २८२६।
४. यथाविध्यनुप्रयोगः -
पूर्वस्मिन् २८२७।
५. समुच्चये सामान्यवचनस्य २८२८।
६. छन्दसि लुङ्-लङ्-लिटः ३४२३।

लेट् प्रत्ययः

७. लिङर्थे लेट् ३४२४।
८. उपसंवादा-शङ्कयोश्च ३४३१।

इत आरभ्य ३.४.१७ इति यावत् वैदिकाः
कृत्प्रत्ययाः

९. तुमर्थे से-सेनसे-ऽसेन्क्से-कसे-
नध्यै-अध्यैन्-कध्यै-कध्यैन्-
शध्यै-शध्यैन्-तवै-
तवेङ्-तवेनः ३४३६।
१०. प्रयै रोहिष्यै अव्यथिष्यै ३४३७।
११. दृशे विख्ये च ३४३८।

णमुल्-कमुल् प्रत्ययौ

१२. शकि णमुल्कमुलौ ३४३९।

तोसुन्-कसुन् प्रत्ययौ

१३. ईश्वरे तोसुन्कसुनौ ३४४०।

केन्-केन्य-त्वन्-प्रत्ययाः

१४. कृत्यार्थे तवै केन्केन्यत्वनः ३४४१।

एश् प्रत्ययः

१५. अवचक्षे च २४४२।

तोसुन् प्रत्ययः

१६. भावलक्षणे स्थेण्कृञ्वदि-चरि-
हु-तमि-जनिभ्यस्तोसुन् ३४४३।

कसुन् प्रत्ययः

१७. सृपितृदोः कसुन् ३४४४।

इतो लौकिकाः कृत्प्रत्ययाः

क्त्वा प्रत्ययः

१८. अलंखल्वोः प्रतिषेधयोः -
प्राचां क्त्वा ३३१६।
१९. उदीचां माङो व्यतीहारे ३३१७।
२०. परावरयोगे च ३३१९।
२१. समान-कर्तृकयोः पूर्वकाले ३३२०।

णमुल् प्रत्यय

२२. आभीक्ष्ण्ये णमुल् च ३३४३।

क्त्वा-णमुल्-प्रत्ययौ

२३. न यद्यनाकाङ्क्षे ३३४४।
२४. विभाषाऽग्रे-प्रथम-पूर्वेषु ३३४५।

खमुञ् प्रत्ययः

२५. कर्मण्याक्रोशे कृञः खमुञ् ३३४६।

णमुल् प्रत्ययः

२६. स्वादुमि णमुल् ३३४७।
२७. अन्यथैवं कथमित्थंसु - सिद्धाप्रयोगश्चेत् ३३४८।
२८. यथातथयोरसूया-प्रतिवचने ३३४९।
२९. कर्मणि दृशिविदोः साकल्ये ३३५०।
३०. यावति विन्दजीवोः ३३५१।
३१. चर्मोदरयोः पूरे ३३५२।
३२. वर्षप्रमाण ऊलोपश्चास्या - न्यतरस्याम् ३३५३।
३३. चेलेः क्नोपेः ३३५४।
३४. निमूल-समूलयोः कषः ३३५५।
३५. शुष्क-चूर्ण-रूक्षेषु पिषः ३३५६।
३६. समूलाकृतजीवेषु हन्कृञ्ग्रहः ३३५७।
३७. करणे हनः ३३५८।
३८. स्नेहने पिषः ३३५९।
३९. हस्ते वर्त्तिग्रहोः ३३६०।
४०. स्वे पुषः ३३६१।
४१. अधिकरणे बन्धः ३३६२।
४२. संज्ञायाम् ३३६३।
४३. कर्त्रोर्जीवपुरुषयोर्नशि-वहोः ३३६४।
४४. ऊर्ध्वे शुषिपूरोः ३३६५।
४५. उपमाने कर्मणि च ३३६६।
४६. कषादिषु - यथाविध्यनुप्रयोगः ३३६७।
४७. उपदंशस्तृतीयायाम् ३३६८।
४८. हिंसार्थानां च - समानकर्मकाणाम् ३३६९।
४९. सप्तम्यां चोपपीडरुधकर्षः ३३७०।
५०. समासत्तौ ३३७१।
५१. प्रमाणे च ३३७२।
५२. अपादाने च परीप्सायाम् ३३७३।
५३. द्वितीयायां च ३३७४।
५४. स्वाङ्गेऽध्रुवे ३३७६।
५५. परिक्लिश्यमाने च ३३७७।
५६. विशि-पति-पदि-स्कन्दां - व्याप्यमानासेव्यमानयोः ३३७८।
५७. अस्यति-तृषोः क्रियान्तरे - कालेषु ३३७९।
५८. नाम्न्यादिशिग्रहोः ३३८०।

क्त्वा-णमुल्-प्रत्ययौ

५९. अव्ययेऽयथाभिप्रेताख्याने - कृञः क्त्वाणमुलौ ३३८१।
६०. तिर्यच्यपवर्गे ३३८२।
६१. स्वाङ्गे तस्प्रत्यये कृभ्वोः ३३८३।
६२. नाधार्थप्रत्यये च्व्यर्थे ३३८४।
६३. तूष्णीमि भुवः ३३८५।
६४. अन्वच्या-नुलोम्ये ३३८६।

तुमुन् प्रत्ययः

६५. शक-धृष-ज्ञा-ग्ला-घट-रभ-लभ-क्रम-सहार्हास्त्यर्थेषु - तुमुन् ३१७७।
६६. पर्याप्तिवचनेष्वलमर्थेषु ३१७८।

लकाराणां कृत्प्रत्ययानां चार्थाः

६७. कर्तरि कृत् २८३२।

६८. भव्य-गेय-प्रवचनीयोपस्थानीय-जन्याप्लाव्यापात्या वा २८९४।

६९. लः कर्मणि च भावे -चाकर्मकेभ्यः २१५२।

७०. तयोरेव कृत्य-क्त-खलर्थाः २८३३।

७१. आदिकर्मणि क्तः कर्तरि च ३०५३।

७२. गत्यर्था-कर्मकश्लिष-शीङ्-स्थास -वस-जन-रुह-जीर्यतिभ्यश्च ३०८६।

७३. दाश-गोघ्नौ संप्रदाने ३१७२।

७४. भीमादयोऽपादाने ३१७३।

७५. ताभ्या-मन्यत्रोणादयः ३१७४।

७६. क्तोऽधिकरणे च ध्रौव्य-गति-प्रत्यवसानार्थेभ्यः ३०८७।

लाधिकारः

७७. लस्य २१५३।

लस्येत्ययमधिकारः ३.४.११२ इति यावत्। अकार उच्चारणार्थः। दश लकारा अनुबन्धविशिष्टा विहिता, अर्थविशेषे, काल--विशेषे च। त एवोत्सृष्टानुबन्धा अत्र गृहीताः। लकारमात्रं स्थानित्वेनाधिक्रियते। यदित ऊर्ध्वमनुक्रमिष्यते लस्येत्येवं तद्वेदितव्यम्।

७८. तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातांझ-थासाथांध्व-मिड्वहि-महिङ् २१५४।

७९. टित आत्मनेपदानां टेरे २२३३।

८०. थासः से २२३६।

८१. लिटस्तझयोरेशिरेच् २२४१।

८२. परस्मैपदानां णलतुसुस् -थलथुस-णल्वमाः २१७३।

८३. विदो लटो वा २४६४।

८४. ब्रुवः पञ्चाना-मादित -आहो ब्रुवः २४५०।

८५. लोटो लङ्वत् २१९८।

८६. एरुः २१९६।

८७. सेर्ह्यपिच्च २२०१।

८८. वा छन्दसि ३५५२।

८९. मेर्निः २२०३।

९०. आमेतः २२५१।

९१. सवाभ्यां वामौ २२५२।

९२. आडुत्तमस्य पिच्च २२०४।

९३. एत ऐ २२५३।

९४. लेटोऽडाटौ ३४२७।

९५. आत ऐ ३४२९।

९६. वैतोऽन्यत्र ३४३०।

९७. इतश्च लोपः परस्मैदेषु ३४२६।

९८. स उत्तमस्य ३४२८।

९९. नित्यं ङितः २२००।

१००. इतश्च २२०७।

१०१. तस्थस्थमिपां तान्तन्तामः २१९९।

१०२. लिङः सीयुट् २२५५।

१०३. यासुट् परस्मैपदेषूदात्तो -ङिच्च २२०९।

१०४. किदाशिषि २२१६।

१०५. झस्य रन् २२५६।

१०६. इटोऽत् २२५७।

१०७. सुट् तिथोः २२१० ।
१०८. झेर्जुस् २२१३ ।
१०९. सिजभ्यस्तविदिभ्यश्च २२२६ ।
११०. आतः २२२७ ।
१११. लङः शाकटायनस्यैव २४६३ ।
११२. द्विषश्च २४३५ ।

सार्वधातुकसंज्ञा

११३. तिङ्शित्सार्वधातुकम् २१६६ ।

आर्धधातुकसंज्ञा

११४. आर्धधातुकं शेषः २१८७ ।
११५. लिट् च २१७२ ।
११६. लिङाशिषि २२१५ ।
११७. छन्दस्युभयथा ३४३५ ।

## चतुर्थाध्याये प्रथमः पादः

प्रातिपदिकाधिकारः

१. ङ्याप्प्रातिपदिकात् १८२ ।

अधिकारोऽयमापञ्चमाध्यायपरिसमाप्तेः ५.४.१६० इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यते ङ्याप्प्रातिपदिकादित्येवं तद् वेदितव्यम् । अत्र स्वादिषु कप्पर्यन्तेषु प्रत्ययेषु प्रकृतिरधिक्रियते । अस्मिन्नधिकारे त्रिविधाः सन्ति प्रत्ययाः । स्वादिप्रत्ययाः, स्त्रीप्रत्ययाः, तद्धितप्रत्ययाश्च ।

**स्वादि-प्रत्ययाः**

२. स्वौजसमौट्-छष्टाभ्यांभिस्-ङेभ्यां-भ्यस्-ङसिभ्यांभ्यस्-ङसोसाम्-ङ्योस्सुप् १८३ ।

स्त्र्यधिकारः

३. स्त्रियाम् ४५३ ।

अधिकारोऽयम् ४.१.८१ इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यते स्त्रियामित्येवं तद् वेदितव्यम् । ङ्याप्प्रातिपदिकादिति सर्वाधिकारेऽपि प्रातिपदिकमात्रमत्र प्रकरणे संबध्यते, ङ्यापोरनेनैव विधानात् ।

टाप्-प्रत्ययः

४. अजाद्यतष्टाप् ४५४ ।

ङीप्-प्रत्ययः

५. ऋन्नेभ्यो ङीप् ३०६ ।
६. उगितश्च ४५५ ।
७. वनो र च ४५६ ।
८. पादोऽन्यतरस्याम् ४५७ ।
९. टाबृचि ४५८ ।
१०. न षट्स्वस्रादिभ्यः ३०८ ।
११. मनः ४५९ ।
१२. अनो बहुव्रीहेः ४६० ।

डाप्-प्रत्ययः

१३. डाबुभाभ्यामन्यतरस्याम् ४६१ ।

अनुपसर्जनाधिकारः

१४. अनुपसर्जनात् ४६९ ।

अधिकारोऽयम् । उत्तरसूत्रेषूपसर्जने प्रतिषेधं करोति । यदित ऊर्ध्वमनुक्रमिष्यतेऽनुपसर्जनादित्येवं तद् वेदितव्यम् ।

ङीप्-प्रत्ययः

१५. टिड्ढाणञ्-द्वयसज्दघ्नञ्-मात्रच्-तयप्-ठक्ठञ्कञ्-क्वरपः ४७० ।
१६. यञश्च ४७१ ।

ष्फप्रत्ययः

१७. प्राचां ष्फ तद्धितः ४७३ ।
१८. सर्वत्र लोहितादिकतन्तेभ्यः ४७६ ।
१९. कौरव्यमाण्डूकाभ्यां च ४७७ ।

ङीप्-प्रत्ययः

२०. वयसि प्रथमे ४७८ ।

२१. द्विगोः ४७९ ।

२२. अपरिमाण-बिस्ताचित-कम्बल्येभ्यो न तद्धितलुकि ४८० ।

२३. काण्डान्तात्क्षेत्रे ४८१ ।

२४. पुरुषात्प्रमाणेऽन्यतरस्याम् ४८२ ।

२५. बहुव्रीहेरूधसो ङीष् ४८४ ।

२६. संख्याव्ययादेर्ङीप् ४८५ ।

२७. दामहायनान्ताच्च ४८६ ।

२८. अन उपधालोपिनोऽन्यतरस्याम् ४६२ ।

२९. नित्यं संज्ञाछन्दसोः ४८७ ।

३०. केवल-मामक-भागधेय-पापापर-समानार्य-कृत-सुमङ्गल-भेषजाच्च ४८८ ।

३१. रात्रेश्चाजसौ ३४४५ ।

३२. अन्तर्वत्पतिवतोर्नुक् ४८९ ।

३३. पत्युर्नो यज्ञसंयोगे ४९० ।

३४. विभाषा सपूर्वस्य ४९१ ।

३५. नित्यं सपत्न्यादिषु ४९२ ।

३६. पूतक्रतो-रै च ४९३ ।

३७. वृषाकप्यग्नि-कुसित-कुसीदाना-मुदात्तः ४९४ ।

३८. मनोरौ वा ४९५ ।

३९. वर्णादनुदात्तात्तोपधात्तो नः ४९६ ।

ङीष्-प्रत्ययः

४०. अन्यतो ङीष् ४९७ ।

४१. षिद्गौरादिभ्यश्च ४९८ ।

४२. जानपद-कुण्ड-गोणस्थल-भाज-नाग-काल-नील- कुश-कामुक-कबराद्- वृत्त्यमत्रा-वपना-कृत्रिमा-श्राणा-स्थौल्य-वर्णानाच्छांदना-योविकार-मैथुनेच्छा-केश-वेशेषु ५०० ।

४३. शोणात्प्राचाम् ५०१ ।

४४. वोतो गुणवचनात् ५०२ ।

४५. बह्वादिभ्यश्च ५०३ ।

४६. नित्यं छन्दसि ३४४६ ।

४७. भुवश्च ३४४७ ।

४८. पुंयोगादाख्यायाम् ५०४ ।

४९. इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-हिमारण्य-यव-यवन-मातुलाचार्या-णामानुक् ५०५ ।

५०. क्रीतात्करणपूर्वात् ५०६ ।

५१. क्तादल्पाख्यायाम् ५०७ ।

५२. बहुव्रीहेश्चान्तोदात्तात् ५०८ ।

५३. अस्वाङ्गपूर्वपदाद्वा ५०९ ।

५४. स्वाङ्गाच्चोपसर्जना-दसंयोगोपधाद् ५१० ।

५५. नासिकोदरौष्ठ-जङ्घा-दन्त-कर्ण-शृङ्गाच्च ५११ ।

५६. न क्रोडादिबह्वचः ५१२ ।

५७. सहनञ्विद्यमानपूर्वाच्च ५१३ ।

५८. नखमुखात्संज्ञायाम् ५१४ ।

५९. दीर्घजिह्वी चच्छन्दसि ३४४८ ।

६०. दिक्पूर्वपदान्ङीप् ५१५ ।

६१. वाहः ५१६ ।

६२. सख्य-शिश्वीति भाषायाम् ५१७।

६३. जातेरस्त्रीविषया-दयोपधात् ५१८।

६४. पाक-कर्ण-पर्ण-पुष्प-फल-मूल-वालोत्तर-पदाच्च ५१९।

६५. इतो मनुष्यजातेः ५२०।

ऊङ्-प्रत्ययः

६६. ऊङुतः ५२१।

६७. बाह्वन्तात्संज्ञायाम् ५२२।

६८. पङ्गोश्च ५२३।

६९. ऊरूत्तरपदादौपम्ये ५२४।

७०. संहित-शफ-लक्षण-वामादेश्च ५२५।

७१. कद्रु-कमण्डल्वोश्छन्दसि ३४४९।

७२. संज्ञायाम् ५२६।

ङीन्-प्रत्ययः

७३. शाङ्र्गरवाद्यञो ङीन् ५२७।

चाप्-प्रत्ययः

७४. यङश्चाप् ५२८।

७५. आवट्याच्च ५२९।

## अथ तद्धिताधिकारः

७६. तद्धिताः ५३०।

अधिकारोऽयमापञ्चमाध्यायपरिसमाप्तेः ५.४.१६० इति यावत्। ये प्रत्यया इत ऊर्ध्वमनुक्रमिष्यन्ते, तद्धितसंज्ञास्ते वेदितव्याः।

ति-प्रत्ययः

७७. यूनस्तिः ५३१।

ष्यङ्-प्रत्ययः

७८. अणिञोरनार्षयोर्गुरूपोत्तमयोः - ष्यङ् गोत्रे ११९८।

७९. गोत्रावयवात् ११९९।

८०. क्रौड्यादिभ्यश्च १२००।

८१. दैवयज्ञि-शौचिवृक्षि-सात्यमुग्रि-काण्डेविद्धिभ्यो-ऽन्यतरस्याम् १२०१।

समर्थाधिकारः

८२. समर्थानां प्रथमाद्वा १०७२।

अधिकारोऽयम्। त्रयमप्यधिक्रियते - समर्थानामिति, प्रथमादिति, वा इति च। स्वार्थिकप्रत्ययावधिश्चायमधिकारः 'प्राग्दिशो विभक्तिः ५.३.१' इति यावत्। स्वार्थिकेषु ह्यस्योपयोगो नास्ति। विकल्पोऽपि तत्रा-नवस्थितः। केचिन्नित्यमेव भवन्ति। समर्थानां प्रथमाद्वा, इति सूत्रस्य लक्षणवाक्यानि 'तस्यापत्यम्' 'तेन रक्तं रागाद्' 'तत्र भवः' इत्येवमादीनि भविष्यन्ति। तेषु सामर्थ्ये सति प्रथमनिर्दिष्टादेव विकल्पेन प्रत्ययो भवतीति वेदितव्यम्।

अत्र ध्यातव्यम्। इत आरभ्य 'प्राग्दिशो विभक्तिः ५.३.१' इत्यतः प्राक् १४१ तद्धितार्था अस्थूलाक्षरैर्निर्दिष्टाः सन्ति। ते चार्था अण्-ठक्-यत्-छ-ठञ् इत्येतेषु पञ्चसु महोत्सर्गप्रत्ययेषु विभक्ताः सन्ति।

इदानीमेतेषां पञ्चमहोत्सर्गप्रत्ययाना--मधिकाराः पृथक्कृत्य प्रदर्श्यन्ते। अत्र यानि सूत्राणि तद्धितार्थान् निर्दिशन्ति, तान्यग्रे--ऽस्थूलाक्षरैर्निर्दिष्टानि सन्ति।

## अथ अणधिकारः

### प्राग्दीव्यतीयः

८३. प्राग्दीव्यतोऽण् १०७३।

अधिकारोऽयम्। 'तेन दीव्यति खनति

जयति जितम् ४.४.२' इति सूत्रात् प्राक्। अस्य सूत्रस्य दीव्यच्छब्दोऽस्याधिकार--स्यावधित्वेन गृह्यते। अतः प्रागेतस्माद् दीव्यत्संशब्दनात् सन्ति येऽपि ४४ अर्थाः प्राग्दीव्यतीयाः 'तस्यापत्यम्' 'तेन रक्तं रागाद्' इत्यादय इत ऊर्ध्वं वक्ष्यमाणाः, तत्रापवादविषयं परिहृत्याण् प्रवर्तते। अर्थनिर्देशकसूत्राण्य-स्थूलाक्षरैर्निर्दिष्टानि।

अथ प्राग्दीव्यतीयाः सामान्यप्रत्ययाः।

८४. **अश्वपत्यादिभ्यश्च १०७४।**

८५. **दित्य-दित्यादित्य-पत्युत्तरपदाण्ण्यः १०७७।**

८६. **उत्सादिभ्योऽञ् १०७८।**

८७. **स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् १०७९।**

'धान्यानां भवने क्षेत्रे खञ् (५.२.१)' सूत्रं वक्ष्यति। अस्मात्सूत्रात्प्राक् सन्ति येऽप्यर्था--स्तेष्वर्थेषु स्त्रीशब्दात् पुंस्-शब्दाच्च यथाक्रमं नञ्स्नञौ प्रत्ययौ भवत, इति अणपवादोऽयम्।

लुक्प्रकरणम् ४.१.९१ यावत्

८८. **द्विगोर्लुगनपत्ये १०८०।**

८९. **गोत्रेऽलुगचि १०८१।**

९०. **यूनि लुक् १०८३।**

९१. **फक्फिञो-रन्यतरस्याम् १०८७।**

**अथ प्राग्दीव्यतीया अर्था**

अस्थूलाक्षरैर्निर्दिष्टाः

९२. तस्यापत्यम् १०८८।

**नियमसूत्रम्**

९३. **एको गोत्रे १०९३।**

९४. **गोत्राद्यून्यस्त्रियाम् १०९४।**

अथापत्यार्थाः प्रत्ययाः

९५. **अत इञ् १०९५।**

९६. **बाह्वादिभ्यश्च १०९६।**

९७. **सुधातु-रकङ् च १०९७।**

९८. **गोत्रे कुञ्जादिभ्यश्च्फञ् १०९९।**

९९. **नडादिभ्यः फक् ११०१।**

१००. **हरितादिभ्यो ञः ११०२।**

१०१. **यञिञोश्च ११०३।**

१०२. **शरद्वच्छुनक-दर्भाद् भृगु-वत्सा--ग्रायणेषु ११०४।**

१०३. **द्रोण-पर्वत-जीवन्ता-दन्यतरस्याम् ११०५।**

१०४. **अनृष्यानन्तर्ये - बिदादिभ्योऽञ् ११०६।**

१०५. **गर्गादिभ्यो यञ् ११०७।**

१०६. **मधुबभ्र्वोर्ब्राह्मण-कौशिकयोः ११०९।**

१०७. **कपिबोधादाङ्गिरसे १११०।**

१०८. **वतण्डाच्च ११११।**

१०९. **लुक्स्त्रियाम् १११२।**

११०. **अश्वादिभ्यः फञ् १११३।**

१११. **भर्गात्त्रैगर्ते १११४।**

११२. **शिवादिभ्योऽण् १११५।**

११३. **अवृद्धाभ्यो नदीमानुषी--भ्यस्तन्नामिकाभ्यः १११६।**

११४. **ऋष्यन्धक-वृष्णि-कुरुभ्यश्च १११७।**

११५. **मातुरुत्संख्या-संभद्र-पूर्वायाः १११८।**

११६. कन्यायाः कनीन च १११९।
११७. विकर्ण-शुङ्गच्छगलाद्-वत्स-भरद्वाजात्रिषु ११२०।
११८. पीलाया वा ११२१।
११९. ढक्च मण्डूकात् ११२२।
१२०. स्त्रीभ्यो ढक् ११२३।
१२१. द्व्यचः ११२४।
१२२. इतश्चानिञः ११२५।
१२३. शुभ्रादिभ्यश्च ११२६।
१२४. विकर्ण-कुषीतकात्काश्यपे ११२७।
१२५. भ्रुवो वुक्च ११२८।
१२६. कल्याण्यादीना-मिनङ् च ११३१।
१२७. कुलटाया वा ११३२।
१२८. चटकाया ऐरक् ११३४।
१२९. गोधाया ढ्रक् ११३५।
१३०. आर-गुदीचाम् ११३६।
१३१. क्षुद्राभ्यो वा ११३७।
१३२. पितृष्वसुश्छण् ११३८।
१३३. ढकि लोपः ११३९।
१३४. मातृष्वसुश्च ११४०।
१३५. चतुष्पाद्भ्यो ढञ् ११४१।
१३६. गृष्ट्यादिभ्यश्च ११४३।
१३७. राजश्वशुराद्यत् ११५३।
१३८. क्षत्राद् घः ११६१।
१३९. कुलात् खः ११६२।
१४०. अपूर्वपदा-दन्यतरस्यां यड्-ढकञौ ११६३।
१४१. महाकुला-दञ्खञौ ११६४।
१४२. दुष्कुलाड्-ढक् ११६५।
१४३. स्वसुश्छः ११६६।
१४४. भ्रातुर्व्यच्च ११६७।
१४५. व्यन्सपत्ने ११६८।
१४६. रेवत्यादिभ्यष्ठक् ११६९।
१४७. गोस्त्रियाः कुत्सने ण च ११७१।
१४८. वृद्धाट्-ठक्-सौवीरेषु बहुलम् ११७२।
१४९. फेश्छ च ११७३।
१५०. फाण्टाहृति-मिमताभ्यां - ण फिञौ ११७४।
१५१. कुर्वादिभ्यो ण्यः ११७५।
१५२. सेनान्त-लक्षणकारिभ्यश्च ११७६।
१५३. उदीचा-मिञ् ११७७।
१५४. तिकादिभ्यः फिञ् ११७८।
१५५. कौशल्य-कार्मार्याभ्यां च ११७९।
१५६. अणो द्व्यचः ११८०।
१५७. उदीचां वृद्धादगोत्रात् ११८१।
१५८. वाकिनादीनां कुक्च ११८२।
१५९. पुत्रान्ता-दन्यतरस्याम् ११८३।
१६०. प्राचामवृद्धात् फिन्बहुलम् ११८४।
१६१. मनोर्जातावञ्यतौ षुक्च ११८५।

गोत्रसंज्ञा

१६२. अपत्यं पौत्रप्रभृति गोत्रम् १०८९।

युवसंज्ञा ४.३.१६७ इति यावत्

१६३. जीवति तु वंश्ये युवा १०९०।
१६४. भ्रातरि च ज्यायसि १०९१।
१६५. वान्यस्मिन्सपिण्डे स्थविरतरे - जीवति १०९२।

इति युवसंज्ञा

१६६. जनपदशब्दात्क्षत्रियादञ् ११८६।
१६७. साल्वेय-गान्धारिभ्यां च ११८७।
१६८. द्व्यञ्मगध-कलिङ्ग-सूरमसा-दण् ११८८।
१६९. वृद्धेत्कोसलाजादाञ् ञ्यङ् ११८९।
१७०. कुरुनादिभ्यो ण्यः ११९०।
१७१. साल्वावयव-प्रत्यग्रथ-कल-
-कूटाश्मकादिञ् ११९१।

तद्राजसंज्ञा

१७२. ते तद्राजाः ११९२।

४.१.१६८ इत्यत आरभ्य ४.१.१७३ इत्यन्तं विहिता अण्, अञ्, ञ्यङ्, ड्यण्, ण्य प्रत्यया तद्राजसंज्ञा भवन्ति। तद्राजसंज्ञायाः फलं 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' '२.४.६२' इत्यनेन तद्राजप्रत्ययस्य लुक्।

१७३. कम्बोजाल्लुक् ११९४।
१७४. स्त्रियामवन्ति-कुन्ति-
कुरुभ्यश्च ११९५।
१७५. अतश्च ११९६।
१७६. न प्राच्यभर्गादि-यौधेयादिभ्यः ११९७।

इत्यपत्यार्थाः प्रत्ययाः।

## चतुर्थाध्याये द्वितीयः पादः

१. तेन रक्तं रागात् १२०२।
२. लाक्षारोचनाशकल-
कर्दमाट्ठक् १२०३।
३. नक्षत्रेण युक्त कालः १२०४।
४. लुबविशेषे १२०५।
५. संज्ञायां श्रवणाश्वत्थाभ्याम् १२०६।
६. द्वन्द्वाच्छः १२०७।
७. दृष्टं साम १२०८।
८. कलेर्ढक् १२०९।
९. वामदेवाड्-ड्यड्-ड्यौ १२१०।
१०. परिवृतो रथः १२११।
११. पाण्डुकम्बलादिनिः १२१२।
१२. द्वैपवैयाघ्रादञ् १२१३।
१३. कौमारापूर्ववचने १२१४।
१४. तत्रोद्धृतममत्रेभ्यः १२१५।
१५. स्थण्डिलाच्छयितरि व्रते १२१६।
१६. संस्कृतं भक्षाः १२१७।
१७. शूलोखाद्यत् १२१८।
१८. दध्नष्ठक् १२१९।
१९. उदश्वितोऽन्यतरस्याम् १२२०।
२०. क्षीराड्-ढञ् १२२२।
२१. सास्मिन्पौर्णमासीति
संज्ञायाम् १२२३।
२२. आग्रहायण्यश्वत्थाट्-ठक् १२२४।
२३. विभाषा फाल्गुनी-श्रवणा-
कार्तिकी-चैत्रीभ्यः १२२५।
२४. सास्य देवता १२२६।
२५. कस्येत् १२२७।
२६. शुक्राद्घन् १२२८।
२७. अपोनप्त्रपां-नप्तृभ्यां घः १२२९।
२८. छ च १२३०।
२९. महेन्द्राद् घाणौ च १२३१।
३०. सोमाट्ट्यण् १२३२।
३१. वाय्वृतुपित्रुषसो यत् १२३३।

३२. द्यावापृथिवी-शुनासीर-मरुत्व-दग्नीषोम-वास्तोष्पति - गृहमेधाच्छ च १२३५ ।
३३. अग्नेर्ढक् १२३६ ।
३४. कालेभ्यो भववत् १२३७ ।
३५. महाराज-प्रोष्ठपदाट्-ठञ् १२३८ ।
३६. पितृव्य-मातुल-मातामह-पितामहाः १२४२ ।
३७. तस्य समूहः १२४३ ।
३८. भिक्षादिभ्योऽण् १२४४ ।
३९. गोत्रोक्षोष्ट्रो-रभ्र-राज-राजन्य-राजपुत्र-वत्स-मनुष्याजाद् वुञ् १२४६ ।
४०. केदाराद्यञ्च १२४८ ।
४१. ठञ् कवचिनश्च १२४९ ।
४२. ब्राह्मण-माणव-वाडवाद्यन् १२५० ।
४३. ग्राम-जन-बन्धुभ्यस्तल् १२५१ ।
४४. अनुदात्तादेरञ् १२५३ ।
४५. खण्डिकादिभ्यश्च १२५४ ।
४६. चरणेभ्यो धर्मवत् १२५५ ।
४७. अचित्त-हस्तिधेनोष्ठक् १२५६ ।
४८. केशाश्वाभ्यां यञ्छा-वन्यतरस्याम् १२५७ ।
४९. पाशादिभ्यो यः १२५८ ।
५०. खलगो-रथात् १२५९ ।
५१. इनि-त्र-कट्यचश्च १२६० ।
५२. विषयो देशे १२६१ ।
५३. राजन्यादिभ्यो वुञ् १२६२ ।
५४. भौरिक्याद्यैषु-कार्यादिभ्यो-विधल्-भक्तलौ १२६३ ।
५५. सोऽस्यादिरितिच्छन्दसः प्रगाथेषु १२६४ ।
५६. संग्रामे प्रयोजन-योद्धृभ्यः १२६५ ।
५७. तदस्यां प्रहरणमिति - क्रीडायां णः १२६६ ।
५८. घञः सास्यां क्रियेति ञः १२६७ ।
५९. तदधीते तद्वेद १२६९ ।
६०. क्रतूक्थादिसूत्रान्ताट्ठक् १२७० ।
६१. क्रमादिभ्यो वुन् १२७१ ।
६२. अनुब्राह्मणादिनिः १२७२ ।
६३. वसन्तादिभ्यष्ठक् १२७३ ।
६४. प्रोक्ताल्लुक् १२७४ ।
६५. सूत्राच्च कोपधात् १२७७ ।
६६. छन्दोब्राह्मणानि च - तद्विषयाणि १२७८ ।

## चतुरर्थाः

६७. तदस्मिन्नस्तीति देशे - तन्नाम्नि १२७९ ।
६८. तेन निर्वृत्तम् १२८० ।
६९. तस्य निवासः १२८१ ।
७०. अदूरभवश्च १२८२ ।

इत आरभ्य 'नडादीनां कुक्च ४.२.९१' इति यावत् ये प्रत्यया विहितास्त एतेषु चतुर्ष्वर्थेषु भवन्ति ।

७१. ओरञ् १२८३ ।
७२. मतोश्च बह्व-जङ्गात् १२८४ ।
७३. बह्वचः कूपेषु १२८५ ।
७४. उदक्च विपाशः १२८६ ।
७५. संकलादिभ्यश्च १२८७ ।

७६. स्त्रीषु सौवीर-साल्वप्राक्षु १२८८।

७७. सुवास्त्वादिभ्योऽण् १२८९।

७८. रोणी १२९०।

७९. कोपधाच्च १२९१।

८०. वुञ्-छण्-कठजिल-सेनि-र-ढञ्-ण्य-य-फक्-फिञिञ्-ञ्य-कक्-ठको-ऽरीहण-कृशाश्वर्श्य-कुमुद-काश-तृण-प्रेक्षाश्म-सखि-संकाश-बल-पक्ष-कर्ण-सुतंगम-प्रगदिन्-वराह-कुमुदादिभ्यः १२९२।

८१. जनपदे लुप् १२९३।

८२. वरणादिभ्यश्च १३०१।

८३. शर्कराया वा १३०२।

८४. ठक्छौ च १३०३।

८५. नद्यां मतुप् १३०४।

८६. मध्वादिभ्यश्च १३०५।

८७. कुमुद-नड-वेतसेभ्यो - ड्मतुप् १३०६।

८८. नड-शादाद् ड्वलच् १३०७।

८९. शिखाया वलच् १३०८।

९०. उत्करादिभ्यश्छः १३०९।

९१. नडादीनां कुक्च १३१०।

## अथ शेषाधिकारः

९२. शेषे १३१२।

अपत्यादिश्चतुरर्थपर्यन्ता अर्था उक्ताः। तेभ्योऽन्योऽर्थः 'तत्र जातः ४.३.२५' इत्यत आरभ्य 'तस्येदम् ४.३.१२०' इति यावत् शेषः। एतेषु जातादिशैषिकेष्वर्थेषु यथाविहिताः घादयः प्रत्ययाः स्युः।

ये अपत्यादिचतुरर्थपर्यन्ता अर्था उक्तास्तेषु घादयो मा भूवन्निति शेषाधिकारः क्रियते। शेष इति लक्षणं चाधिकारश्च। अतो येऽर्थाः क्वचिन्नोक्तास्तेष्वपि अण् प्रत्ययो भवतु।

९३. राष्ट्रावारपाराद् घखौ १३१३।

९४. ग्रामाद्यखञौ १३१४।

९५. कत्त्र्यादिभ्यो ढकञ् १३१५।

९६. कुल-कुक्षि-ग्रीवाभ्यः श्वास्यलंकारेषु १३१६।

९७. नद्यादिभ्यो ढक् १३१७।

९८. दक्षिणा-पश्चात्-पुरसस्त्यक् १३१८।

९९. कापिश्याः ष्फक् १३१९।

१००. रङ्को-रमनुष्येऽण् च १३२०।

१०१. द्युप्रागपा-गुदक्प्रतीचो यत् १३२१।

१०२. कन्थायाष्ठक् १३२२।

१०३. वर्णौ वुक् १३२३।

१०४. अव्ययात्त्यप् १३२४।

१०५. ऐषमोह्यःश्वसो-ऽन्यतरस्याम् १३२६।

१०६. तीररूप्योत्तरपदादञ्ञौ १३२७।

१०७. दिक्पूर्वपदा-दसंज्ञायां ञः १३२८।

१०८. मद्रेभ्योऽञ् १३२९।

१०९. उदीच्यग्रामाच्च - बह्वचोऽन्तोदात्तात् १३३०।

११०. प्रस्थोत्तरपद-पलद्यादि - कोपधादण् १३३१।

१११. कण्वादिभ्यो गोत्रे १३३२।

११२. इञश्च १३३३।

११३. न द्व्यचः प्राच्य-भरतेषु १३३४।

११४. वृद्धाच्छः १३३७।

११५. भवतष्ठक्छसौ १३३९ ।
११६. काश्यादिभ्यष्ठञ्ञिठौ १३४० ।
११७. वाहीकग्रामेभ्यश्च १३४१ ।
११८. विभाषो-शीनरेषु १३४२ ।
११९. ओर्देशे ठञ् १३४३ ।
१२०. वृद्धात्प्राचाम् १३४४ ।
१२१. धन्वयोपधाद् वुञ् १३४५ ।
१२२. प्रस्थपुरवहान्ताच्च १३४६ ।
१२३. रोपधेतोः प्राचाम् १३४७ ।
१२४. जनपद-तदवध्योश्च १३४८ ।
१२५. अवृद्धादपि बहुवचन-विषयात् १३४९ ।
१२६. कच्छाग्नि-वक्त्र-वर्तोत्तरपदात् १३५० ।
१२७. धूमादिभ्यश्च १३५१ ।
१२८. नगरात्कुत्सनप्रावीण्ययोः १३५२ ।
१२९. अरण्यान्मनुष्ये १३५३ ।
१३०. विभाषा कुरु-युगन्धराभ्याम् १३५४ ।
१३१. मद्रवृज्योः कन् १३५५ ।
१३२. कोपधादण् १३५६ ।
१३३. कच्छादिभ्यश्च १३५७ ।
१३४. मनुष्य-तत्स्थयोर्वुञ् १३५८ ।
१३५. अपदातौ साल्वात् १३५९ ।
१३६. गो-यवाग्वोश्च १३६० ।
१३७. गर्तोत्तरपदाच्छः १३६१ ।
१३८. गहादिभ्यश्च १३६२ ।
१३९. प्राचां कटादेः१३६३ ।
१४०. राज्ञः क च १३६४ ।
१४१. वृद्धा-दकेकान्त-खोपधात् १३६५ ।
१४२. कन्था-पलद-नगरग्राम-ह्रदोत्तरपदात् १३६६ ।
१४३. पर्वताच्च १३६७ ।
१४४. विभाषा मनुष्ये १३६८ ।
१४५. कृकण-पर्णाद् भारद्वाजे १३६९ ।

## चतुर्थाध्याये तृतीयः पादः

१. युष्मदस्मदो-रन्यतरस्यां - खञ्च १३७० ।
२. तस्मिन्नणि च - युष्माकास्माकौ १३७१ ।
३. तवक-ममका-वेकवचने १३७२ ।
४. अर्धाद्यत् १३७४ ।
५. परावराधमोत्तम-पूर्वाच्च १३७५ ।
६. दिक्पूर्वपदाट्-ठञ्च १३७६
७. ग्रामजनपदैकदेशा-दञ्ठञौ १३७७ ।
८. मध्यान्मः १३७८ ।
९. अ साम्प्रतिके १३७९ ।
१०. द्वीपादनुसमुद्रं यञ् १३८० ।
११. कालाट्ठञ् १३८१ ।
१२. श्राद्धे शरदः १३८२ ।
१३. विभाषा रोगातपयोः १३८३ ।
१४. निशा-प्रदोषाभ्यां च १३८४ ।
१५. श्वसस्तुट् च १३८५ ।
१६. सन्धिवेलाद्यृतु - नक्षत्रेभ्योऽण् १३८७ ।
१७. प्रावृष एण्यः १३८८ ।
१८. वर्षाभ्यष्ठक् १३८९ ।
१९. छन्दसि ठञ् ३४५० ।
२०. वसन्ताच्च ३४५१ ।

२१. हेमन्ताच्च ३४५२ ।
२२. सर्वत्राण्च तलोपश्च १३९० ।
२३. सायंचिरं-प्राह्णे-प्रगे-ऽव्ययेभ्यष्ट्युट्युलौ तुट् च १३९१ ।
२४ विभाषा पूर्वाह्णा-पराह्णाभ्याम् १३९२ ।
२५. तत्र जातः १३९३ ।
२६. प्रावृषष्ठप् १३९४ ।
२७. संज्ञायां शरदो वुञ् १३९५ ।
२८. पूर्वाह्णा-पराह्णार्द्रा-मूल-प्रदोषावस्कराद् वुन् १४०१ ।
२९. पथः पन्थ च १४०२ ।
३०. अमावास्याया वा १४०३ ।
३१. अ च १४०४ ।
३२. सिन्ध्वपकराभ्यां कन् १४०५ ।
३३. अणञौ च १४०६ ।
३४. श्रविष्ठा-फल्गुन्यनुराधा-स्वाति-तिष्य-पुनर्वसु-हस्त-विशाखाषाढा-बहुलाल्लुक् १४०७ ।
३५. स्थानान्त-गोशाल-खरशालाच्च १४१० ।
३६. वत्सशालाभिजिदश्वयुक्-शतभिषजो वा १४११ ।
३७. नक्षत्रेभ्यो बहुलम् १४१२ ।
३८. कृतलब्धक्रीतकुशलाः १४१३ ।
३९. प्रायभवः १४१४ ।
४०. उपजानूपकर्णोप-नीवेष्ठक् १४१५ ।
४१. संभूते १४१६ ।
४२. कोशाड्ढञ् १४१७ ।
४३. कालात् साधु-पुष्प्यत् पच्यमानेषु १४१८ ।
४४. उप्ते च १४१९ ।
४५. आश्वयुज्या वुञ् १४२० ।
४६. ग्रीष्मवसन्ता -दन्यतरस्याम् १४२१ ।
४७. देयमृणे १४२२ ।
४८. कलाप्यश्वत्थ-यवबुसाद् वुन् १४२३ ।
४९. ग्रीष्मावरसमाद् वुञ् १४२४ ।
५०. संवत्सराग्रहायणीभ्यां ठञ्च १४२५ ।
५१. व्याहरति मृगः १४२६ ।
५२. तदस्य सोढम् १४२७ ।
५३. तत्र भवः १४२८ ।
५४. दिगादिभ्यो यत् १४२९ ।
५५. शरीरावयवाच्च १४३० ।
५६. दृति-कुक्षि-कलशि-वस्त्यस्त्यहेर्ढञ् १४३३ ।
५७. ग्रीवाभ्योऽण्च १४३४ ।
५८. गम्भीराञ्ज्यः १४३५ ।
५९. अव्ययीभावाच्च १४३६ ।
६०. अन्तःपूर्वपदाट् ठञ् १४३७ ।
६१. ग्रामात्पर्यनुपूर्वात् १४४० ।
६२. जिह्वामूलाङ्गुलेश्छः १४४१ ।
६३. वर्गान्ताच्च १४४२ ।
६४. अशब्दे -यत्खा-वन्यतरस्याम् १४४३ ।
६५. कर्णललाटात् कनलंकारे १४४४ ।

६६. तस्य व्याख्यान इति -
च व्याख्यातव्यनाम्नः १४४५ ।
६७. बह्वचोऽन्तोदात्ताट्-ठञ् १४४६ ।
६८. क्रतुयज्ञेभ्यश्च १४४७ ।
६९. अध्यायेष्वेवर्षे १४४८ ।
७०. पौरोडाशपुरोडाशात्ष्ठन् १४४९ ।
७१. छन्दसो यदणौ १४५० ।
७२. द्व्यजृद्-ब्राह्मणर्क्-प्रथमाध्वर-
पुरश्चरण-नामा -
ख्याताट्ठक् १४५१ ।
७३. अणृगयनादिभ्यः१४५२ ।
७४. तत आगतः १४५३ ।
७५. ठगायस्थानेभ्यः १४५४ ।
७६. शुण्डिकादिभ्योऽण् १४५५ ।
७७. विद्या-योनि-सम्बन्धेभ्यो -
वुञ् १४५६ ।
७८. ऋतष्ठञ् १४५७ ।
७९. पितुर्यच्च १४५८ ।
८०. गोत्रा-दङ्कवत् १४५९ ।
८१. हेतुमनुष्येभ्योऽन्यतरस्यां -
रूप्यः १४६१ ।
८२. मयट् च १४६२ ।
८३. प्रभवति १४६३ ।
८४. विदूराञ्यः १४६४ ।
८५. तद् गच्छति पथिदूतयोः १४६५ ।
८६. अभिनिष्क्रामति द्वारम् १४६६ ।
८७. अधिकृत्य कृते ग्रन्थे १४६७ ।
८८. शिशुक्रन्द-यमसभ-द्वन्द्वेन्द्र-
जननादिभ्यश्छः १४६८ ।
८९. सोऽस्य निवासः १४६९ ।

९०. अभिजनश्च १४७० ।
९१. आयुधजीविभ्यश्छः पर्वते १४७१ ।
९२. शण्डिकादिभ्यो ञ्यः १४७२ ।
९३. सिन्धुतक्ष-
शिलादिभ्योऽणञौ १४७३ ।
९४. तूदीशलातुर-वर्मतीकूचवाराड्-
ढक्छण्ढञ्यकः १४७४ ।
९५. भक्तिः १४७५ ।
९६. अचित्ता-ददेशकालाट्ठक् १४७६ ।
९७. महाराजाट्ठञ् १४७७ ।
९८. वासुदेवार्जुनाभ्यां वुन् १४७८ ।
९९. गोत्रक्षत्रियाख्येभ्यो -
बहुलं वुञ् १४७९ ।
१००. जनपदिनां जनपदवत्सर्वं जनपदेन
समानशब्दानां बहुवचने १४८० ।
१०१. तेन प्रोक्तम् १४८१ ।
१०२. तित्तिरि-वरतन्तु-
खण्डिकोखाच्छण् १४८२ ।
१०३. काश्यप-कौशिकाभ्या-मृषिभ्यां -
णिनिः १४८३ ।
१०४. कलापि-वैशम्पायनान्ते-
-वासिभ्यश्च १४८४ ।
१०५. पुराणप्रोक्तेषु -
ब्राह्मणकल्पेषु १४८५ ।
१०६. शौनकादिभ्यश्छन्दसि १४८६ ।
१०७. कठचरकाल्लुक् १४८७ ।
१०८. कलापिनोऽण् १४८८ ।
१०९. छगलिनो ढिनुक् १४८९ ।
११०. पाराशर्य-शिलालिभ्यां भिक्षु-
नटसूत्रयोः १४९० ।

**१११. कर्मन्दकृशाश्वादिनिः १४९१।**

११२. तेनैककदिक् १४९२।

## अव्ययतद्धितः

**११३. तसिश्च १४९३।**

'तसिश्च ४.३.११३' इत्यनेन विधीयमान-स्तसिप्रत्ययोऽव्ययसंज्ञकः।

**११४. उरसो यच्च १४९४।**

११५. उपज्ञाते १४९५।

११६. कृते ग्रन्थे १४९६।

**११७. संज्ञायाम् १४९७।**

**११८. कुलालादिभ्यो वुञ् १४९८।**

**११९. क्षुद्रा-भ्रमर-वटर-पादपादञ् १४९९।**

१२०. तस्येदम् १५००।

**१२१. रथाद्यत् १५०१।**

**१२२. पत्रपूर्वादञ् १५०२।**

**१२३. पत्राध्वर्युपरिषदश्च १५०३।**

१२४. हलसीराट्ठक् १५०४।

**१२५. द्वन्द्वाद् वुन् - वैरमैथुनिकयोः १५०५।**

**१२६. गोत्रचरणाद् वुञ् १५०६।**

**१२७. सङ्घाङ्क-लक्षणेष्वञ्यञिञा--मण् १५०७।**

१२८. शाकलाद्वा १५०८।

**१२९. छन्दो-गौक्थिक-याज्ञिक-बह्वृचनटाञ्ञ्यः १५०९।**

**१३०. न दण्डमाणवान्तेवासिषु १५१०।**

**१३१. रैवतिकादिभ्यश्छः १५११।**

**१३२. कौपिञ्जल-हास्तिपदादण् १५१२।**

**१३३. आथर्वणिकस्येकलोपश्च १५१३।**

इति शेषाधिकारः।

('तस्य विकारः' 'अवयवे च प्राण्योषधि-वृक्षेभ्यः' इत्यनयोर्विकारावयवयोरर्थयोः प्राण्यो--षधिवृक्षेभ्यो यथाविहिताः प्रत्यया भवन्ति। प्राण्योषधिवृक्षान्यप्रकृतिभ्यः शैषिका एवेति विवेकः।)

१३४. तस्य विकारः १५१४।

१३५. अवयवे च - प्राण्योषधिवृक्षेभ्यः १५१५।

**१३६. बिल्वादिभ्योऽण् १५१६।**

**१३७. कोपधाच्च १५१७।**

**१३८. त्रपुजतुनोः षुक् १५१८।**

**१३९. ओरञ् १५१९।**

**१४०. अनुदात्तादेश्च १५२०।**

**१४१. पलाशादिभ्यो वा १५२१।**

**१४२. शम्याः ष्लञ् १५२२।**

**१४३. मयड्वैतयोर्भाषायाम-भक्ष्याच्छादनयोः १५२३।**

**१४४. नित्यं वृद्धशरादिभ्यः १५२४।**

**१४५. गोश्च पुरीषे १५२५।**

**१४६. पिष्टाच्च १५२६।**

**१४७. संज्ञायां कन् १५२७।**

**१४८. व्रीहेः पुरोडाशे १५२८।**

**१४९. असंज्ञायां तिलयवाभ्याम् १५२९।**

**१५०. द्व्यचश्छन्दसि ३४५३।**

**१५१. नोत्वद्वर्ध्र-बिल्वात् ३४५४।**

**१५२. तालादिभ्योऽण् १५३०।**

**१५३. जातरूपेभ्यः परिमाणे १५३१।**

१५४. **प्राणि-रजतादिभ्योऽञ् १५३२।**
१५५. **ञितश्च तत्प्रत्ययात् १५३३।**
१५६. **क्रीतवत्परिमाणात् १५३४।**
१५७. **उष्ट्राद् वुञ् १५३५।**
१५८. **उमोर्णयोर्वा १५३६।**
१५९. **एण्या ढञ् १५३७।**
१६०. **गोपयसोर्यत् १५३८।**
१६१. **द्रोश्च १५३९।**
१६२. **माने वयः १५४०।**
१६३. **फले लुक् १५४१।**
१६४. **प्लक्षादिभ्योऽण् १५४२।**
१६५. **जम्ब्वा वा १४४४।**
१६६. **लुप् च १५४५।**
१६७. **हरीतक्यादिभ्यश्च १५४६।**
१६८. **कंसीय-परशव्ययोर्यञञौ - लुक्च १५४७।**

## चतुर्थाध्याये चतुर्थः पादः

## अथ ठगधिकारः

### प्रागवहतीयः

१. **प्रागवहतेष्ठक् १५४८।**

'प्रागवहतेष्ठक् ४.४.१' इत्यत आरभ्या--धिकारोऽयं 'तद्वहति रथयुगप्रासङ्गम् ४.४.७६' इत्यतः प्राक्। अस्य सूत्रस्य वहति-शब्दोऽस्याधिकारस्यावधित्वेन गृह्यते।

अतः प्रागेतस्माद् वहतिसंशब्दनादित ऊर्ध्वं सन्ति येऽपि ३६ अर्था अस्थूलाक्षरैर्निर्दिष्टाः प्रागवहतीया वक्ष्यमाणाः, 'तेन दीव्यति खनति जयति जितम्' 'संस्कृतम्' इत्यादयः, तत्रापवादविषयं परिहृत्य ठक् प्रवर्तते।

२. तेन दीव्यति खनति जयति - जितम् १५५०।
३. संस्कृतम् १५५१।
४. **कुलत्थकोपधादण् १५५२।**
५. तरति १५५३।
६. **गोपुच्छाट्ठञ् १५५४।**
७. **नौद्व्यचष्ठन् १५५५।**
८. चरति १५५६।
९. **आकर्षात्ष्ठल् १५५७।**
१०. **पर्पादिभ्यः ष्ठन् १५५८।**
११. **श्वगणाट्ठञ्च १५५९।**
१२. वेतनादिभ्यो जीवति १५६२।
१३. **वस्नक्रयविक्रयाट्ठन् १५६३।**
१४. **आयुधाच्छ च १५६४।**
१५. हरत्युत्सङ्गादिभ्यः १५६५।
१६. **भस्त्रादिभ्यः ष्ठन् १५६६।**
१७. **विभाषा विवधात् १५६७।**
१८. **अण्कुटिलिकायाः १५६८।**
१९. निर्वृत्तेऽक्षद्यूतादिभ्यः १५६९।
२०. **क्त्रेर्मम्नित्यम् १५७०।**
२१. **अपमित्य-याचिताभ्यां-कक्कनौ १५७१।**
२२. संसृष्टे १५७२।
२३. **चूर्णादिनिः १५७३।**
२४. **लवणाल्लुक् १५७४।**
२५. **मुद्गादण् १५७५।**
२६. व्यञ्जनै-रुपसिक्ते १५७६।
२७. ओजःसहोम्भसा वर्तते १५७७।
२८. **तत्प्रत्यनु-पूर्व-मीप-लोम-कूलम् १५७८।**

२९. परिमुखं च १५७९।
३०. प्रयच्छति गर्ह्यम् १५८०।
३१. कुसीद-दशैका-दशात्-ष्ठन्ष्ठचौ १५८१।
३२. उञ्छति १५८२।
३३. रक्षति १५८३।
३४. शब्ददर्दुरं करोति १५८४।
३५. पक्षि-मत्स्य-मृगान्हन्ति १५८५।
३६. परिपन्थं च तिष्ठति १५८६।
३७. माथोत्तरपदपदव्यनुपदं - धावति १५८७।
३८. आक्रन्दाट्ठञ्च १५८८।
३९. पदोत्तरपदं गृह्णाति १५८९।
४०. प्रतिकण्ठार्थललामं च १५९०।
४१. धर्मं चरति १५९१।
४२. प्रतिपथमेति ठंश्च १५९२।
४३. समवायान्समवैति १५९३।
४४. परिषदो ण्यः १५९४।
४५. सेनाया वा १५९५।
४६. संज्ञायां ललाटकुक्कुट्यौ - पश्यति १५९६।
४७. तस्य धर्म्यम् १५९७।
४८. अण्महिष्यादिभ्यः १५७८।
४९. ऋतोऽञ् १५९९।
५०. अवक्रयः १६००।
५१. तदस्य पण्यम् १६०१।
५२. लवणाट्ठञ् १६०२।
५३. किसरादिभ्यः ष्ठन् १६०३।
५४. शलालुनोऽन्यतरस्याम् १६०४।
५५. शिल्पम् १६०५।
५६. मड्डुक-झर्झरा-दणन्य-तरस्याम् १६०६।
५७. प्रहरणम् १६०७।
५८. परश्वधाट्ठञ्च १६०८।
५९. शक्तियष्ट्योरीकक् १६०९।
६०. अस्तिनास्तिदिष्टं मतिः १६१०।
६१. शीलम् १६११।
६२. छत्रादिभ्यो णः १६१२।
६३. कर्माध्ययने वृत्तम् १६१४।
६४. बह्वच्पूर्वपदाट्ठच् १६१५।
६५. हितं भक्षाः १६१६।
६६. तदस्मै दीयते नियुक्तम् १६१७।
६७. श्राणा-मांसौदनाद्-टिठन् १६१८
६८. भक्तादणन्यतरस्याम् १६१९।
६९. तत्र नियुक्तः १६२०।
७०. अगारान्ताट् ठन् १६२१।
७१. अध्यायिन्यदेशकालात् १६२२।
७२. कठिनान्तप्रस्तारसंस्थानेषु - व्यवहरति १६२३।
७३. निकटे वसति १६२४।
७४. आवसथात्ष्ठल् १६२५।

**अथ यदधिकारः**

**प्राग्घितीयः**

७५. प्राग्घिताद्यत् १६२६।

'प्राग्घिताद्यत् ४.४.७५' इत्यत आरभ्याधिकारोऽयं 'तस्मै हितम् ५.१.५' इत्यत प्राक्। अस्य सूत्रस्य हितशब्दोऽस्या-धिकारस्यावधित्वेन गृह्यते।

अतः प्रागेतस्माद्धितसंशब्दनादित ऊर्ध्वं सन्ति येऽपि ३१ अर्था अस्थूलाक्षरैर्निर्दिष्टाः प्राग्घितीया वक्ष्यमाणा, 'तद्वहति रथयुग -प्रासङ्गम्' 'विध्यत्यधनुषा' 'धनगणं लब्धा' इत्यादयः, तत्रापवादविषयं परिहृत्य यत् प्रवर्तते ।

७६. तद्वहति रथयुगप्रासङ्गम् १६२७ ।

७७. **धुरो यड्ढकौ १६२८ ।**

७८. **खः सर्वधुरात् १६३० ।**

७९. **एकधुराल्लुक्च १६३१ ।**

८०. **शकटादण् १६३२ ।**

८१. **हलसीराट् ठक् १६३३ ।**

८२. **संज्ञायां जन्या १६३४ ।**

८३. विध्यत्यधनुषा १६३५ ।

८४. धनगणं लब्धा १६३६ ।

८५. **अन्नाण्णः १६३७ ।**

८६. वशं गतः १६३८ ।

८७. पदमस्मिन्दृश्यम् १६३९ ।

८८. मूलमस्याबर्हि १६४० ।

८९. **संज्ञायां धेनुष्या १६४१ ।**

९०. गृहपतिना संयुक्ते ञ्यः १६४२ ।

९१. **नौवयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्यस्तार्य-तुल्य-प्राप्य-वध्यानाम्य-सम-समित-संमितेषु १६४३ ।**

९२. धर्मपथ्यर्थन्यायादनपेते १६४४ ।

९३. छन्दसो निर्मिते १६४५ ।

९४. **उरसोऽण्च १६४६ ।**

९५. हृदयस्य प्रियः १६४७ ।

९६. बन्धने चर्षौ १६४८ ।

९७. मतजनहलात् -करणजल्पकर्षेषु १६४९ ।

९८. तत्र साधुः १६५० ।

९९. **प्रतिजनादिभ्यः खञ् १६५१ ।**

१००. **भक्ताण्णः १६५२ ।**

१०१. **परिषदो ण्यः १६५३ ।**

१०२. **कथादिभ्यष्ठक् १६५४ ।**

१०३. **गुडादिभ्यष्ठञ् १६५५ ।**

१०४. **पथ्यतिथि-वसति-स्वपतेर्ढञ् १६५६ ।**

१०५. **सभाया यः १६५७ ।**

१०६. **ढश्छन्दसि ३४५५ ।**

१०७. समानतीर्थे वासी १६५८ ।

१०८. समानोदरे शयित ओ चोदात्तः १६५९ ।

१०९. **सोदराद्यः १६६० ।**

**भवाधिकारश्छन्दोऽधिकारश्च**

'भवे छन्दसि ४.४.११०' इत्यत आरभ्य छन्दोऽधिकार आपादपरिसमाप्तेः । भवाधिकारश्च 'समुद्राभ्राद् घ, इति यावत् ।

११०. भवे छन्दसि ३४५६ ।

१११. **पाथोनदीभ्यां ड्यण् ३४५७ ।**

११२. वेशन्तहिमवद्भ्यामण् ३४५८ ।

११३. **स्रोतसो विभाषा -ड्यड्ड्यौ ३४५९ ।**

११४. **सगर्भसयूथसनुताद्यन् ३४६० ।**

११५. **तुग्राद् घन् ३४६१ ।**

११६. अग्राद्यत् ३४६२ ।

११७. **घच्छौ च ३४६३ ।**

११८. **समुद्राभ्राद् घः ३४६४।**
११९. बर्हिषि दत्तम् ३४६५।
१२०. दूतस्य भागकर्मणी ३४६६।
१२१. रक्षोयातूनां हननी ३४६७।
१२२. रेवती जगती-हविष्याभ्यः -
प्रशस्ये ३४६८।
१२३. असुरस्य स्वम् ३४६९।
१२४. **मायायामण् ३४७०।**
१२५. तद्वानासा-मुपधानो मन्त्र -
इतीष्टकासु लुक्च मतोः ३४७१।
१२६. **अश्विमानण् ३४७२।**
१२७. **वयस्यासु मूर्ध्नो मतुप् ३४७३।**
१२८. मत्वर्थे मासतन्वोः ३४७४।
१२९. **मधोर्ञ च ३४७५।**
१३०. **ओजसोऽहनि यत्खौ ३४७६।**
१३१. **वेशोयशआदेर्भगाद्यल् ३४७७।**
१३२. **ख च ३४७८।**
१३३. पूर्वैः कृतमिनयौ च ३४७९।
१३४. अद्भिः संस्कृतम् ३४८०।
१३५. सहस्रेण संमितौ घः ३४८१।
१३६. **मतौ च ३४८२।**
१३७. सोममर्हति यः ३४८३।
१३८. मये च ३४८४।
१३९. **मधोः ३४८५।**
१४०. **वसोः समूहे च ३४८६।**
१४१. **नक्षत्राद् घः३४८७।**
१४२. **सर्वदेवात्तातिल् ३४८८।**
१४३. शिवशमरिष्टस्य करे ३४८९।
१४४. भावे च ३४९०।

## पञ्चमाध्याये प्रथमः पादः

## अथ छाधिकारः

### प्राक्क्रीतीयः

१. **प्राक् क्रीताच्छः १६६१।**

'प्राक्क्रीताच्छः५.१.१' इत्यत आरभ्या--धिकारोऽयम् 'तेन क्रीतम् ५.१.३७' इत्यतः प्राक्। अस्य सूत्रस्य क्रीतशब्दोऽस्याधिकार--स्यावधित्वेन गृह्यते।

अतः प्रागेतस्मात् क्रीतसंशब्दनादित ऊर्ध्वं सन्ति येऽपि त्रयोऽर्था अस्थूलाक्षरै--र्निर्दिष्टाः प्राक्क्रीतीया वक्ष्यमाणाः, 'तस्मै हितम्' 'तदर्थं विकृतेः प्रकृतौ' 'तदस्य तदस्मिन् स्यादिति' इत्यादयः, तत्रापवादविषयं परिहृत्य छः प्रवर्तते।

२. **उगवादिभ्यो यत् १६६२।**
३. **कम्बलाच्च संज्ञायाम् १६६३।**
४. **विभाषा हविरपूपादिभ्यः १६६४।**
५. तस्मै हितम् १६६५।
६. **शरीरावयवाद्यत् १६६६।**
७. **खल-यव-माष-तिल-
वृषब्रह्मणश्च १६६८।**
८. **अजाविभ्यां थ्यन् १६६९।**
९. **आत्मन्विश्वजन-भोगोत्तर-
पदात्खः १६७०।**
१०. **सर्वपुरुषाभ्यां णढञौ १६७२।**
११. **माणव-चरकाभ्यां खञ् १६७३।**
१२ तदर्थं विकृतेः प्रकृतौ १६७४।
१३ **छदि-रुपधि-बलेर्ढञ् १६७५।**
१४. **ऋषभोपानहोर्ञ्यः १६७६।**
१५. **चर्मणोऽञ् १६७७।**

१६. तदस्य तदस्मिन्स्यादिति १६७८।

१७. **परिखाया ढञ् १६७९।**

## अथ ठञधिकारः

## प्राग्वतीयः

१८. **प्राग्वतेष्ठञ् १६८०।**

अधिकारोऽयम्। 'तेन तुल्यं क्रिया चेद् वतिः' ५.१.११५ इति सूत्रात् प्राक्। अस्य सूत्रस्य वतिशब्दोऽस्याधिकारस्यावधित्वेन गृह्यते। अतः प्रागेतस्माद् वतिसंशब्दनात् सन्ति येऽपि २७ अर्था अस्थूलाक्षरैर्निर्दिष्टाः प्राग्वतीया वक्ष्यमाणाः 'तेन क्रीतम्' 'तस्य निमित्तं संयोगोत्पातौ' इत्यादयः, तत्रापवादविषयं परिहृत्य ठञ् प्रवर्तते।

## अथ ठगधिकारः प्रागार्हीयः

१९. **आर्हादगोपुच्छसंख्या-परिमाणाट्ठक् १६८१।**

'तदर्हति ५.१.६३' इत्येतदभिव्याप्य ठञधिकारमध्ये ठञोऽपवादष्ठगधिक्रियते, गोपुच्छादीन् वर्जयित्वा। इत्थञ्चैतेष्वेकादश--स्वार्हीयेष्वर्थेषु गोपुच्छसंख्यापरिमाणादिभ्य--ष्ठञ् भवति, तदन्येभ्यष्ठगिति वेदितव्यम्। ठक्ठञोर्मध्ये स्वरे भेदः।

२०. **असमासे निष्कादिभ्यः १६८२।**

२१. **शताच्च ठन्यतावशते १६८६।**

२२. **संख्याया अतिशदन्तायाः - कन् १६८७।**

२३. **वतोरिड् वा १६८८।**

२४. **विंशतित्रिंशद्भ्यां - ड्वुन्नसंज्ञायाम् १६८९।**

२५. **कंसाट् टिठन् १६९०।**

२६. **शूर्पा-दञन्यतरस्याम् १६९१।**

२७. **शतमान-विंशतिक-सहस्र-वसनादण् १६९२।**

२८. **अध्यर्धपूर्व-द्विगोर्लुगसंज्ञायाम् १६९३।**

२९. **विभाषा कार्षापण-सहस्राभ्याम् १६९४।**

३०. **द्वित्रिपूर्वान्निष्कात् १६९५।**

३१. **बिस्ताच्च १६९६।**

३२. **विंशतिकात्खः १६९७।**

३३. **खार्या ईकन् १६९८।**

३४. **पण-पाद-माष-शताद्यत् १६९९।**

३५. **शाणाद्वा १७००।**

३६. **द्वित्रिपूर्वादण्च १७०१।**

३७. तेन क्रीतम् १७०२।

३८. तस्य निमित्तं - संयोगोत्पातौ १७०४।

३९. **गोद्व्यचोऽसंख्या-परिमाणाश्वादेर्यत् १७०५।**

४०. **पुत्राच्छ च १७०६।**

४१. **सर्वभूमि-पृथिवीभ्यामणञौ १७०७।**

४२. तस्येश्वरः १७०८।

४३. तत्र विदित इति च १७०९।

४४. **लोकसर्वलोकाट्ठञ् १७१०।**

४५. तस्य वापः १७११।

४६. **पात्रात्ष्ठन् १७१२।**

४७. तदस्मिन्वृद्ध्यायलाभ - शुल्कोपदा दीयते १७१३।

